कामधेनुः २

रसात्पादांशकं हेम पिष्टिं कुर्याच सुंदराम् ॥
विलिप्य कामधेनुं च नागद्रावे नियोजयेत् ॥१३६॥
तं नागं कुरुते रुक्मं वांछितार्थेषु सिद्धिदम् ॥
गुटिकां कामधेनुं तां प्रत्यहं धारयेन्मुखे ॥
शस्त्रास्त्रैर्न च भिद्येत दिव्यदेहमवाप्नुयात् ॥१३७॥

तारवेधी कल्क

शिलया मारितो नागः सूतराजसमन्वितः ॥
रंजितो गंधरागेण समहेम्ना च सारयेत् ॥
तारवेधः प्रदातव्यो दिव्यं भवति कांचनं ॥१३८॥

नागवेध

शिलया रविदुग्धेन नागपत्राणि लेपयेत् ॥
मारयेत्पुटयोगेन दिव्यं भवति कांचनम् ॥१३९॥

सितस्वर्णवेध

मेषीक्षीराम्लवर्गाभ्यां दरदं घर्मभावितम् ॥
शतधा तत्प्रयत्नेन शोष्यं पेष्यं खरातपे ॥१४०॥
सितस्वर्णस्य पत्राणि लिप्त्वा लिप्त्वा पुटे पचेत् ॥
एवं त्रिसप्तधा कुर्याद् दिव्यं भवति कांचनं ॥१४१॥

गगनग्रासः

तृणजातीय मूलं तु मातुलिंगरसेन च ॥
त्रिदिनं मर्दयेत्सूतं गगनं ग्रसते क्षणात् ॥१४२॥
सिद्धैर्गणैः सुरवरै रससिद्धि कामै
र्वेद्धं हठात्परममंत्रबलेन तैश्च ॥
तस्माद्विशिष्टमनुजैः कृतमंत्रजापैः
कार्यं ततो रसवरे वरबन्धनं च ॥१४३॥

इतिश्री पार्वतीपुत्रनित्यनाथसिद्धविरचिते रसरत्नाकरान्तर्गते वादिखण्डे
अर्द्धसंहारपरनामकं विंशतितमोपदेशः २० ॥

॥ इति विंशतितमोपदेशः २० ॥

मूषागर्भे लिपेत्तेन तद्वगं तत्र निक्षिपेत् ॥१२२॥
स्तोकं स्तोकं क्षिपेत्तस्मिन् विड दत्वा धमन्धमन् ॥
भारसंख्या ग्रसत्येवं गुह्यवंगमिति स्मृतम् ॥१२३॥
द्रुते वगे विनिक्षिप्तं यावत्सख्या न संशयः ॥
तावद् द्रुते न संदेहः सिद्धयोग उदाहृतः ॥१२४॥
क्षिप्त्वाथ माहिषे शृंगे मर्दयन्नग्निना पचेत् ॥
निष्कमेकं भवेद्यावत्तावन्मर्द्य क्षिपन् क्षिपन् ॥१२५॥
तद् भवेद्रसतुल्यं तु समादायाथ तत्समम् ॥१२६॥

गुह्ययोगः

पारदं शुद्धहेमाथ सत्वं भूनागसभवम् ॥
चत्वारिंशन्नागभागा मर्द्यं जंबीरजद्रवैः ॥१२७॥
तद्गोलकं विशोष्याथ कल्के भूनागसंभवे ॥
मूषागर्भे विलेप्यादौ तस्यां गोलं निरोधयेत् ॥१२८॥
धमेत्तीव्राग्निना तावद्यावन्मात्रावशेषितम् ॥
सर्ववद्ग्रसते दत्ते गुह्याख्यं योगमुत्तमम् ॥१२९॥

कामधेनु. १

अथातः संप्रवक्ष्यामि गुटिकाबंधमुत्तमम् ॥
समजीर्णकृतं व्योम समतो रसं जारयेत् ॥१३०॥
रविसंख्यांशकं शुल्वं दत्वा पिष्टिं च कारयेत् ॥
धान्याभ्रकसमं गंधं शुल्वे क्षिप्त्वा विमर्दयेत् ॥१३१॥
तयोर्मूषाकृतिं कृत्वा पिष्टीमध्ये विमोचयेत् ॥
नरमांसेन सवेष्ट्य माषपिष्ट्या तथैव च ॥१३२॥
पचेदतसितैलेन मासमात्रं तु साधकः ॥
अक्षया कामधेनुश्च वंगस्तंभनकारिणी ॥१३३॥

कामधेनु. २

पारदे जार्य कृष्णाभ्रं रूरमष्टगुण यदि ॥
रंजितं गंधरागेण नरमांसेन वेष्टितम् ॥१३४॥
माषपिष्ट्या प्रलिप्याथातसीतैलेन पाचयेत् ॥
कामधेनुरियं ख्याता नागस्तभनकारिणी ॥१३५॥